॥ श्रीः ॥

# महावाक्यविवरणम् ।

( भाषाटीकासमेतम् )

श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशङ्कराश्रमयतिवर्यैर्विरचितम् ।

व्याघ्रचर्माम्बरीणस्वामिरामकृष्णानन्दगिरिविरचितया भाषाटीकया समलंकृतम् ।

तदेतत्

खेमराज श्रीकृष्णदासश्रेष्ठिना

मुम्बय्यां

स्वकीये "श्रीवेङ्कटेश्वर" (स्टीम्) यन्त्रालये

मुद्रयित्वा प्रकाश्यते ।

चैत्र संवत् १९६०, शके १८२५.




# प्रस्तावना ।

प्राणीमात्र सुख ( परमानन्दकी प्राप्ति ) और दुःख ( सर्व अनर्थकी निवृत्ति ) रूप मोक्षकी इच्छा करते हैं परन्तु यह इच्छा आत्मज्ञानके विना अन्य किसी उपायसे परिपूर्ण नहीं होसकती और आत्मज्ञान मनुष्यके अतिरिक्त अन्य प्राणियों को नहीं होसकता. यद्यपि दुःखकी निवृत्ति और सुखकी प्राप्ति सबको अभीष्ट है. इसकारण अन्यप्राणियोंमें भी मुमुक्षुता सम्भवित है तथापि मनुष्यकेअतिरिक्त अन्यको आत्मज्ञानकी योग्यता हैहीनहीं इसलिये अन्यप्राणी आत्मज्ञानसम्पादनमें असमर्थ हैं और मनुष्य समर्थ हैं अतएव मनुष्यमात्रको आ॰ ज्ञानका सम्पादन अवश्य कर्त्तव्य हैं. वह आत्मज्ञान दो प्रकारका है एक परोक्ष और दूसरा अपरोक्ष. वेदान्तके आवान्तरवाक्योंके श्रवणसे परोक्षज्ञान होता है और महा-वाक्योंके श्रवणसे अपरोक्ष. सो दोनों प्रकारके वाक्य वेदचतु-ष्टयीके अन्तर्गत हैं और उन वाक्योंके विवेचनका परमकृपालु श्रीमत्परमहंसपरिव्राजकाचार्य श्रीशङ्कराचार्यजी महाराजके शिष्यानुशिष्य स्वामि श्रीशङ्कराश्रमजीने संस्कृतगद्यात्मक 'महावाक्यविवरण' नामक ग्रन्थ बनाकर अति अनुग्रह किया है परन्तु इसका रसास्वादन संस्कृतके विनापढ़े सर्वसाधरणको दुर्लभ है ये समझ हमने व्याघ्रचर्म्माम्बरीण विद्याविनोदाशुकवि

व्याकिरणाचार्य स्वामि रामकृष्णानन्दगिरिजीसे सरल हिन्दीमें टीका कराकर ऊपर संस्कृत गद्यात्मक मूल और नीचे सरल हिन्दीभाषामें टीकासहित निज "श्रीवेङ्कटेश्वर" प्रेसमें छापके प्रसिद्ध किया, यद्यपि इसग्रन्थमें पुनरुक्ति विशेष हैं तथापि वे स्थूणाखननन्यायसे मुमुक्षुजनोंको ग्रन्थका भूषण प्रतीत होवेगा और एक अर्थको वारंवार अवलोकन कराकर निदिध्यासनको दृढ करेंगे मूलमें पुनरुक्ति होनेके कारण टीकामें भी पुनरुक्तियां मूलके अनुसारही हुई हैं अतः टीकाकार अपनी पुनरुक्तियोंका पाठकोंसे क्षमा प्रार्थी हैं इति शम्.

खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" ( स्टीम् ) यन्त्रालयाध्यक्ष-बंबई.



॥ श्रीः ॥

# अथ महावाक्यविवरणम् ।

## भाषाटीकासमेतम् ।



अथात्ममहावाक्यार्थविवरणं कथयति समस्तविषयवासनाविनिर्मुक्तः स परमहंसः । केवलनिर्विशेषब्रह्मचिन्तनमात्रेणावतिष्ठते स परमहंसः ॥

अब आत्मा और महावाक्योंके अर्थोंका विवरण विवेचन ) करते हैं कि, समस्त विषयोंकी वासनासे त केवल निर्विशेष ब्रह्मचिन्तनमात्रमें स्थित पुरुष परमरपदको प्राप्त होता है ।

यत्र कुत्र तिष्ठति । किङ्करोति । केवलद्वादशमहावाक्यविवरणङ्करोति । किं विवरणङ्कोविचारस्तन्महावाक्यं कीदृशं तत्रोपयादपति वाक्यानि ॥

और प्रारब्धानुसार जिस किसी स्थानमें निवासकर केद्वादश महावाक्योंका विवेचन करता है कि, विवरण है विचार क्या है और महावाक्य कैसे हैं इसकेलिये थकार महावाक्योंका उपादान करते हैं ।

आदौऋग्वेदस्य-प्रज्ञानमानन्दं ब्रह्म, अहं ब्रह्मास्मीति यजुर्वेदस्य तत्त्वमसीति सामवेदस्य,

अयमात्मा ब्रह्मेति अथर्ववेदस्य । अहं ब्रह्मास्मीति यत्परंब्रह्मेत्यादिमहावाक्यैर्ब्रह्मविचारः ॥

जिसमें पहिले ऋग्वेदका महावाक्य "प्रज्ञानमानन्दं ब्रह्म" है और " अहं ब्रह्मास्मि " ये यजुर्वेदका महावाक्य है और "तत्त्वमसि" सामवेदका और "अयमात्मा ब्रह्म" य अथर्वणवेदका है 'अहं ब्रह्मास्मि' और 'यत्परं ब्रह्म इत्यादि महावाक्यों करके ब्रह्मका विचार कर्त्तव्य है ।

तत्रादौ ऋग्वेदेप्रज्ञानशब्दस्यव्याख्यानं क्रियते । एकमेवाद्वितीयं ब्रह्मेति सिद्धान्तः प्रज्ञानं स्वतश्चैतन्यं तद्विशेषा अनेकप्रकारास्तन्मध्ये यथाबुद्ध्यनुसारेण व्याख्यानं क्रियते ॥

उनमेंसे पहिले ऋग्वेदके ब्रह्म और प्रज्ञान शब्दका व्याख्यान करते हैं । कि "एकमेवाद्वितीयं ब्रह्म" ब्रह्म एक और अद्वितीय है ये सिद्धान्त है प्रज्ञान नाम स्वतः चेतनका, उसके विशेष यद्यपि अनेक हैं तथापि उनमें यथाम व्याख्यान करता हूँ ।

प्रकृष्टं उत्कृष्टं ज्ञानं प्रज्ञानं उपाधिरहितं स्वतश्चैतन्यं कालत्रयरहितं अवस्थात्रयरहितंय बन्धमुक्तं स्वतन्त्रं ज्ञानं तत्प्रज्ञानं नाम ॥

अतिशयकरके उत्कृष्ट जो ज्ञान है उसका नाम प्रज्ञान

अर्थात् उपाधिरहित स्वयं चेतन भूत भविष्यत् वर्त्तमान कालत्रयशून्य जाग्रत् स्वप्न सुषुप्ति ये तीनों अवस्थाओंसे रहित विशेषकरके मुक्तस्वरूप स्वतंत्र जो ज्ञान है उसीका नाम प्रज्ञान है ।

यज्ज्ञानेन तु मायाचैतन्यं भवति यज्ज्ञानेन चतुर्विंशतितत्त्वचैतन्यं भवति । किमिदंसूर्याच्चक्षुरिव अग्निपात्रमिव चुम्बकलोहमिव सूत्रधारचित्रमिव काष्ठाग्निरिव पुरुषच्छायेव वातरेणुरिव धनुर्धरबाण इव वृक्षच्छायेव ॥

जिस ज्ञानसे माया चैतन्य है और जिस ज्ञानसे चौवीस तत्त्व चैतन्य हैं. जिसकी नाई जैसे सूर्यसे चक्षु चैतन्य है और अग्निसे पात्र, चुम्बकसे लोहा, सूत्रधारसे चित्र और जैसे काष्ठसे अग्नि, पुरुषसे छाया, वायुसे धूल और धनुर्धारीसे बाण और जैसे वृक्षसे छाया चैतन्य हैं ।

अमुना प्रकारेण परापश्यन्तीमध्यमावैखरीरूपेण चैतन्यं समस्तजगत्प्रपञ्च उत्पद्यते । ज्ञानशक्तीच्छाशक्तिक्रियाशक्तिस्वरूपेण चैतन्यं जगदाकारं भवति ॥

इसीप्रकारसे परा, पश्यन्ती, मध्यमा, वैखरी स्वरूपसे चैतन्यही समस्त जगत् प्रपञ्चरूपसे उत्पन्न होता है ज्ञानशक्ति और इच्छाशक्ति क्रियाशक्तिस्वरूपसे चैतन्य जगत्के आकारको धारण करता है ।

अत एव वासुदेवः परब्रह्मेति श्रुतिः। वसन्त्यस्मिन् भूतानि वासुः। वासुश्चासौ देवश्च वासुदेवः। प्रज्ञान शब्देनोच्यते।भूतानां वसतेः। अत एव वासुदेव उच्य

इसीलिये "वासुदेवः परब्रह्म" वासुदेव परब्रह्म है य श्रुति भगवत्की आज्ञा है जिसमें प्राणी निवास करे उस नाम 'वासु' है और जो प्रकाशमान हो उसका नाम 'देव' अर्थात् जो प्राणियोंका निवासस्थान हो और प्रकाशम हो उसका नाम 'वासुदेव' है प्रज्ञाशब्दसेभी प्राणियों निवास माना है अतएव प्रज्ञाको वासुदेव कहते हैं।

वाक्पाणिपादपायूपस्थाख्यानि पञ्चकर्म्मेन्द्रियचतुष्टयान्तःकरणप्रेरकःअत एव निर्गतान्तः करणेन श्रोत्रद्वारेण शब्दग्रहणं करोति, निर्गतान्तःकरणेन चक्षुर्द्वारेण रूपग्रहणं करोति, निर्गतान्तःकरणेन नासिकाद्वारेण गन्धग्रहणङ्करोति, निर्गतान्तःकरणेन जिह्वाद्वारेण रसग्रहणं करोति, निर्गतान्तःकरणेन त्वग्द्वारेण स्पर्शग्रहणङ्करोति ॥

वाणी, हस्त, पाद, गुदा, लिङ्ग-नामक ये पञ्चकर्मेन्द्रि मन बुद्धि चित्त अहंकार इन चारोंके समुदायरूप अन्तःक णका प्रेरक है निर्गतान्तःकरण अर्थात् विषयके साथ सं रखनेमें समर्थ अन्तःकरणसंयुक्त कर्णद्वारा शब्दका ग्र

करता है, निर्गत अन्तःकरणसंयुक्त चक्षुसे रूप और नासिकासे गन्ध, जिह्वासे रस और चर्म्मसे स्पर्शका ग्रहण करता है।

अत एव श्रोत्रं त्वक् चक्षुर्जिह्वाघ्राणमिति पञ्चज्ञानेन्द्रियप्रेरकः पञ्चकर्मेन्द्रियप्रेरकः मनोबुद्धिरहंकारश्चित्तमित्यन्तःकरणप्रेरकः प्राणापानव्यानोदानसमानाः नागकूर्मकृकरदेवदत्तधनञ्जयाश्चेति भेदेन द्विविधपञ्चवायुप्रेरकः ॥

अतएव श्रोत्र, त्वचा, घ्राण, चक्षु, जिह्वा इन पञ्च ज्ञानेन्द्रियोंके प्रेरणा करनेवाले और वाक्, हस्त, पाद, गुदा, लिङ्ग इन पांच कर्मेन्द्रियोंके प्रेरक और मन, बुद्धि, चित, अहंकार इन चारोंके समुदायरूप अन्तःकरणके प्रेरक, प्राण, अपान, व्यान, उदान, समान, पांच ये और नाग, कूर्म, कृकल, देवदत्त, धनंजय, ये पांच इन दोनों भेदविशिष्ट सर्वके प्रेरक वायु हैं।

समस्तप्रपञ्चोत्पत्तिप्रलयंचकरोति । जगत्साक्षित्वेन पश्यति। तत्प्रज्ञाननामधेयं भवति॥

पूर्वोक्त समस्त प्रपञ्चकी उत्पत्ति और प्रलयका कर्त्ता जगत्को साक्षिरूपसे देखनेवाला प्रज्ञाननामक ब्रह्म है सोई विद्यारण्यस्वामीने भी पञ्चदशीमें कहा है कि, "येनेक्षते शृणोतीदंजिघ्रति व्याकरोति च ॥ स्वाद्वस्वादू विजानाति तत्प्रज्ञानमुदीरितम्" जिसकरके देखता है सुनता है. सूंघता है और

ग्रहण करता है, स्वादिष्ठ और अस्वादिष्ठ जानता है उसको
प्रज्ञान शब्दवाच्य कहते हैं ।

तस्मात् प्राज्ञानशब्देन ब्रह्म विशेषण सर्वेश्वरःकथ्यं
इसीकारण प्रज्ञानशब्दवाच्य ब्रह्मविशेष जगन्नियन्ता
सर्वेश्वर कहाता है. और पञ्चदशीमेंभी कहा है कि
"चतुर्मुखेन्द्रदेवेषु मनुष्या श्वगवादिषु ॥ चैतन्यमे
ब्रह्मातः प्रज्ञानं ब्रह्मम्यपि" ब्रह्मा, इन्द्र, देव आदि
और मनुष्य, अश्व, गो आदिमें जगत्के उत्प
प्रलयका कारण एक चैतन्य ब्रह्म है अतएव प्रज्ञान ब्रह्म में
भी है क्योंकि, प्रज्ञानके अतिरिक्त कोई प्राणी पदार्थ अ
शिष्ट नहीं है ।

तत्सूत्रधार ईश्वरः मायाऽविद्यानटीनृत्यङ्कारय-
ति नट इव । इति ऋग्वेदे प्रज्ञानशब्दार्थनिर्णयः
प्रथमः सिद्धान्तः ॥ १ ॥

वो सूत्रधाररूपी ईश्वर माया और अविद्यारूपी नटी
नटकी नाईं नचाता है यह ऋग्वेदमें प्रज्ञानशब्दके निर्णय
प्रथम सिद्धान्त है ।

अतः परमानन्दशब्दार्थनिर्णयः कथ्यते ॥

ग्रन्थकार इसके अनन्तर परमानन्दशब्दके अर्थका नि
करते हैं ।

आनन्दं ब्रह्मेति व्यजानात्, आनन्दाद्ध्येव ख-

ल्विमानि भूतानि जायन्ते,आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्ति, अभिसंविशन्तीतिश्रुतेः ॥

आनन्दको ब्रह्म जानो आनन्दहींसे पृथिवी,जल,तेज,वायु, आकाश उत्पन्न होते हैं और आनन्दसे जीते हैं आनन्दमेंही लय होते हैं और प्रवेश करते हैं यह श्रुतिप्रमाण है ।

स्वस्वरूपमुपाधिरहितमानन्दङ्करोति यदानन्दंभवति तदाहमित्यात्मानन्दं भवति। तथा अखण्डानन्दं निजबोधानन्दं कैवल्यानन्दं सहजानन्दं अच्युतानन्दं रामानन्दं वीर्यानन्दं सुखानन्दं आनन्दव्यापकानन्दं श्र्यानन्दं प्रकाशानन्दं भवति ॥

उपाधिरहित अपने स्वरूपको आनन्दित करता है जब आनन्द होता है तब 'अहं' इस आत्माके आनन्दको अनुभव करता है और अखण्डानन्द निजबोधानन्द कैवल्यानन्द सहजानन्द अच्युतानन्द रामानन्द वीर्यानन्द सुखानन्द आनन्दव्यापकानन्द, श्र्यानन्द, प्रकाशानन्द, प्रभृतिपदोंको धारण करता है ।

यद्यादाकाशआनन्दो न स्यात्तर्हि प्राणस्यानन्दत्वं कथं संभवति जडत्वात् ॥

जिसकारण आकाश आनन्द नहीं है इसीहेतु प्राणको भी आनन्दत्व नहीं होसक्ता, क्योंकि प्राण आकाशकी नाईं जड है ।

अत एव ब्रह्मानन्देन जगदानन्दो भवति। ब्रह्मानन्दं लब्ध्वा ऋतमानन्दो भूत्वेति श्रुतेः। समस्तप्रपञ्चातीतानन्दःयआनन्दः सत्तामात्रेण समस्तप्रपञ्चमानन्दयति ॥

इसीवास्ते ब्रह्मानन्दसे जगदानन्द होता है जिसमें श्रुति प्रमाण है "ब्रह्मानन्दं लब्ध्वा ऋतमानन्दो भूत्वेति श्रुतेः ब्रह्मानन्दको प्राप्त होकर सत्यआनन्द होता है अर्थ समस्त प्रपञ्चसहित जो आनन्द है सोई आनन्द सम जगत्प्रपञ्चको आनन्दित करता है।

अतएवान्नमयप्राणमयमनोमयविज्ञानमयानन्दमया इति पञ्चकोशात्मको जीवः आनन्दं प्राप्नोति। सच्चिदानन्दस्वरूपं परमात्मेति कथ्यते ॥

अतएव अन्नमय, प्राणमय, मनोमय, विज्ञानमय, औ आनन्दमय इन पञ्चकोशात्मक जो जीव है सो आनन्द प्राप्त होता है और सत् चित् आनन्दस्वरूप परमात्मा कह जाता है।

इत्थं परमात्मानन्दसत्तामात्रेण मूलप्रकृतेरानन्दप्राप्तिर्भवति। तत्कार्यं महदादिचतुर्विंशतितत्त्वानि स्त्रीलिङ्गपुल्लिङ्गरूपेण मिथुनीभवंति अत्यन्तमानन्दयति ॥

इसीप्रकार परमात्मानन्दकी सत्तामात्रसे मूलप्रकृति अर्थात् माया आनन्दको प्राप्त होती है और उस मायाका कार्य आकाश आदि और चौवीस तत्त्व स्त्रीलिङ्ग पुल्लिङ्ग रूपसे परस्पर मिल अत्यन्त आनन्दको प्राप्त हैं।

अतएव वैकुण्ठादिशेषनागपर्यन्तं समस्तजीवजातिदेवदैत्यसिद्धगंधर्वमुनियक्षतिर्यङ्नागकीटपतङ्गस्थावरजङ्गमसमस्ताशिवशक्त्यात्मको भवतीति सत्यम् ॥

इसीकारण वैकुण्ठसे आदिले शेष नागपर्यंत समस्त जीवजाति देव, दैत्य, सिद्ध, गन्धर्व, मुनि, यक्ष, तिर्यक्, नाग, कीट पतङ्ग, स्थावर, जंगम, शिवशक्तिस्वरूपहैं यह सत्य है।

तस्मादेकाकी न रमते द्वितीयमिच्छति स एवात्मा द्विधा भवति पतिःपत्नी चेति ॥

इसीलिये एकाकी पुरुषके वलमेंही रमण करता दूसरेकी इच्छा करता है और वही आत्मा पति और पत्नी इस द्विविधरूपसे परिणत होता है ये श्रुतिमें भी लिखा है कि, "एकोऽहं बहुस्याम्" मैं एक अनेक होऊं।

अतएवात्मव्यतिरेकेण आनन्दं न संभवति जडपदार्थत्वात् ॥

इसीहेतु आत्माके अतिरिक्त यावत् पदार्थको जड होनेसे आनन्द नहीं होसकता।

स्थूलसूक्ष्मकारणमवस्थात्रयाच्चैतन्यं कैवल्यं ब्रह्म तुर्यावस्थामात्रमानन्दं संभवति अतएवानन्दं ब्रह्मेति सत्यम् ॥ इति ऋग्वेदानन्दशब्दव्याख्यानं द्वितीयःसिद्धान्तः ॥ २ ॥

स्थूल सूक्ष्म कारण अवस्थात्रय चैतन्य कैवल्य मोक्ष और ब्रह्मकी चतुर्थावस्थामात्र आनन्दरूपका अनु करती है अतएव आनन्द ब्रह्म है यह सत्य ठहरा यह ऋग्वे आनन्दशब्दके व्याख्यानका दूसरा सिद्धान्त समाप्त हुआ

अतः परं ब्रह्मशब्दनिर्णयः कथ्यतेः–

माया तु शेषनागपर्यन्तं समस्तप्रपञ्चान्वयरूपेणावतिष्ठते । किमिव । सूत्रे मणिगण इव यस्माज्जगदोतप्रोतं ततः ।

अब ब्रह्मशब्दके अर्थका विवेचन करते हैं–स्वामी शङ्क अम माया तो शेषनाग पर्य्यन्त समस्त जगत्प्रपञ्चमें संबन्धि होकर स्थित है किसकी नाईं जैसे सूतके मध्यमें मुनियोंनि समुदाय तद्वत् मायामें जगत् पिरोया हुआ है जैसे एक ता मालाके दाना जिसहेतु मायामें जगत् ओतप्रोत है इसीहे

अतः ब्रह्म सम्पूर्णदेशकालवस्तुस्वरूपं समस्तप्रपञ्चगुणदोषरहितं निर्लेपमच्छेद्यमक्लेद्यमभेद्यमदाह्यमशोष्यम् ॥

इसके आगे आत्माके स्वरूपका वर्णन करते हैं कि, समस्त वस्तुओंके संबंधसे तथा कालके संबंधसे और देशके संबंधसे रहित और देश, काल, वस्तु का स्वरूपभूत समस्त जगत् प्रपञ्चके गुणदोषोंसे रहित और कमलदलकी नाईं निर्लेप शस्त्रादिकों करके छेदन करनेमें अच्छेद्य, जलादिकोंसे जो न भीगसके पाषाण काष्ठ दण्डादिकोंसे जो भेदन नहोसके अग्नि आदिकोंसे दाहरहित और वायु आदिसे जिसका शोषण न होसके ऐसा आत्माका स्वरूप है श्रीमद्भगवद्गीतामें भी श्रीकृष्णचन्द्र परमात्माने कहाहै कि "अच्छेद्यो यमदाह्योयमक्लेद्योऽशोष्य एवच " अर्थ पूर्ववत् समझिये ।

समस्तेषु वस्तुष्वनुस्यूत्तमेकं समस्तानि वस्तुनि यन्नस्पृशति वियद्वत्सदा शुद्धमच्छस्वरूपम् । स नित्योपलब्धिस्वरूपोहमात्मा ॥

समस्तवस्तुओंके साथ जिसका संबंध है और कोइ वस्तु जिसको लिपायमान नहा करसकती आकाशकी नाईं शुद्ध निर्मल जिसका स्वरूप है और नित्य प्राप्त स्वरूप जो आत्मा है सो मै हूं ।

सदसत्संसारस्य असत्यता । प्रतिभासमानत्वात् । कइव । रज्जुसर्प इव शुक्तिरजतमिव सरसि फेनामिव नभोऽभ्रमिव ॥

सत् असत्रूप संसारकी सत्यता प्रातिभासिक है कि
तरह जैसे जेवरीमें सर्प, सीपमें चांदी, तालावमें फेन
आकाशमें मेघ प्रातिभासिक हैं तद्वत् ।

कूटशब्देन मिथ्यामाया आकाशवद्व्याप्त
समस्तप्रपञ्चान्तर्यामित्वेन तिष्ठति । यत्सत्ताय
जगत्सत्यताप्रतिभासमाना भवति ॥

कूटशब्दसे मिथ्यामायाको जानो अकाशके
व्याप्त समस्त जगत्प्रपञ्चमें अन्तर्यामीरूपसे स्थित है
की सत्तामें जगत्की सत्यता प्रातिभासिक होरही है ।

इति ऋग्वेदवाक्येब्रह्मपदार्थनिर्णय अवलोकनीय
काण्डत्रयं उपासनाकाण्डं कर्म्मकाण्डं ज्ञानका
प्रतिभाति वेदे । एतेन परमात्मा सत्यतया उल्लस

यह ऋग्वेदके वाक्यत्रयके पदोंका अर्थ अव
कीजिये और वेदमें मन्त्रकाण्ड, कर्म्मकाण्ड और ज्ञान
ये काण्डत्रय प्रतीत होते हैं इतने लिखनेसे परमा
सत्यता सर्वथा प्रसिद्ध है ।

पञ्चविंशतिः सहस्राणि ब्रह्मवाचो भवंति । विद्याश
क्तियुक्तपरापश्यन्तीमध्यमावैखरीस्वरूपेणअव्य
क्तंस्वरूपं व्यक्तस्वरूपेण प्रकटीकरोति ।
प्रकृतियोगे परा वाक् अव्यक्तरूपेण बुद्धिरहित
नादरहिताऽक्षररहिता केवलचैतन्यमात्रमुल्लसति

ब्रह्मवाणी पचीस हजार है. विद्याशक्ति करके युक्त परा, पश्यन्ती, मध्यमा, वैखरीस्वरूपसे अव्यक्तस्वरूपको व्यक्त अर्थात् स्पष्टस्वरूपसे प्रगट करती है प्रकृतिके संयोगमें परा वाक् अव्यक्त अर्थात् अस्पष्टस्वरूपसे बुद्धि और नाद और नाशरहित केवल चैतन्यमात्रको स्पष्ट करती है।

सैव वाक् अन्तःकरणचतुष्टयवत्पुरुषसंयोगेन षड्जर्षभगांधारमध्यमधैवतनिषादपञ्चमात्मिका पराख्पा भवति। पश्यन्ती विचारज्ञानमयी परां प्रज्ञां विचारयम् उपकरोति । तेन विचारेण परब्रह्मप्राप्तिर्भवति ॥

वही वाणी, मन, बुद्धि, चित्त, अहंकार आत्मक अन्तःकरणसे पुरुषके संयोगमें षड्ज, ऋषभ, गांधार, मध्यम, धैवत, निषाद और पंचमस्वरूपा परा होती है. पश्यन्ती वाक् विचारज्ञानमयी है परा प्रज्ञाके विचारको उपकृत करती है जिसके विचारसे परब्रह्मकी प्राप्ति होती है।

अपरं संसारमतीत्य सैव वाक् नादमयपुरुषस्य संयोगेन मध्यमा वाक नादमयी भवति नादरूपेणोल्लसति ॥

और वही वाणी संसारको अतिक्रमणकर नादमयपुरुषके संयोगसे मध्यमा वाणी नादमयी है अर्थात् नादरूपसे प्रसिद्धहै।

स नाद आत्मसंयोगादग्निवायुभ्यामुपेत्य द्वाविंशतिव
महावाक्यश्रुतिरूपया वाचोल्लसन्तिति। तथाचोक्तं
वह नाद आत्माके संयोगसे अग्नि और वायुको प्राप्त
बाईस श्रुतिरूपसे वाचाऐसी प्रसिद्धिको प्राप्त है वहां प्रमाण
कहा है किः—

शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ परब्र
ह्मप्रतिपादकतया शब्दब्रह्मसत्यं प्रतिपद्यते।
सा प्रज्ञा वैखरी वाक् ॥

शब्दब्रह्ममें जिसने स्नान किया है वह पुरुष परब्रह्मको
होताहै परब्रह्मका प्रतिपादन करनेवाला शब्द है अ
शब्दब्रह्मकी सत्यता प्रतिपादित है वो प्रज्ञारूपा वै
वाणी है।

केषांचिन्मतेन ईश्वरव्यतिरेकेण सर्वकर्त्तृत्वं अन्य
स्य न सम्भवति तद्व्यतिरिक्तस्य जडत्वं प्रतिपा
द्यते। तथा च श्रुतिः—

किसीका मत है कि,ईश्वरके अतिरिक्त सर्वकर्तृत्व अ
को नहीं है ईश्वरसे अतिरिक्त पदार्थमात्र जड हैं तो सर्वक
र्तृत्वकी शक्ति जडम कहांसे वहां श्रुति प्रमाण है किः—

स एवजीवो विचारप्रसूतिः प्राणेन घोषेण गुहा
प्रविष्टो मनोमयं सूक्ष्ममुपेति रूपं मात्रा स्वरो
वर्ण इति श्रुतिः।

वही जीव विचारकी संततिरूप प्राण घोषसंज्ञक प्राण के गुफामें प्रवेशकर मनोमय मनका किया वा मनसे संयुक्त अर्थात् लघुरूपको प्राप्त होताहै मात्रा स्वर और वर्ण रूपसे ।

ईश्वरस्य प्रथमं प्रथमश्वासनिर्गतः ॐकार इति स एवाकारादिषोडश स्वराः कक्कारादिपञ्चविंशति स्पर्शाः यकारादिदशानुस्वराश्च । एवं प्रथमबीजरूपसहिता द्विपञ्चाशद्वर्णात्मिका भवति वाणी ॥

ईश्वरके प्रथम श्वाससे पहिले ॐकार निकला फिर अकार आदिले सोलह स्वर और ककारसे आदिले पचीस स्पर्श कारसे आदि दश अनुस्वार निकले इसीतरह प्रथम बीज कार सहित ५२ वर्णात्मक वाणी हुई ।

तदनन्तरं छन्दोमयं भवति । ऋग्वेदोयजुर्वेदः सामवेदोथर्वणवेदइति चत्त्वारो वेदा भवन्ति ॥

वही वाणी तत्पश्चात् छन्दोबद्ध हुई और ऋग्वेद, यजुर्वेद, सामवेद, अथर्वणवेद ये चार वेद हुए ।

एतेभ्यः सर्वेभ्यो वेदेभ्य एवञ्चतुर्दशविद्या भवन्ति ॥

इन समस्त चारवेदोंसे ऐसे चतुर्दश १४ विद्या उत्पन्न हुई विद्याये हैं ।

ताश्चपुराणन्यायमीमांसाधर्म्मशास्त्राङ्गमिश्रिता वेदाःस्थानानि विद्यानां धर्मस्य च चतुर्दश-इ उपपुराणेतिहासेःउपवेदा धनुर्वेद आयुर्वेदो गांध वेदो मन्त्रवेदः न्यायाद्यैर्नानाप्रकाराश्चतुर्दशवि भवन्ति॥

विद्या और धर्म्मके चतुर्दश १४ स्थान हैं जैसे पु न्याय २ मीमांसा ३ धर्म्मशास्त्र ४ और अङ्ग अर्था क्षा कल्प निरुक्त छन्द ज्योतिष और व्याकरण ५ औ उपपुराण ७ इतिहास ८ उपवेद ९ धनुर्वेदादि नाना विद्या चतुर्दश (१४) हैं।

ताश्च विद्या ब्रह्मा चतुर्भिर्मुखैश्चत्वारो वेदान्निर रमभ्यस्यति ॥

उन चतुर्दशविद्याओंको ब्रह्मा निरन्तर अभ्यास और चारोंमुखसे चारों वेदोंका अभ्यास करते हैं।

पूर्वमुखेन ऋग्वेदं उत्तरमुखेन यजुर्वेदं पश्चिम खेन सामवेदं दक्षिणमुखेनाथर्वणवेदं तत्संबं अङ्गानि दर्शनानिचपठति ॥

जिनमें पूर्वमुखसे ऋग्वेदका अभ्यास,उत्तरमुखसे य पश्चिममुखसे सामवेदका और दक्षिणमुखसे अथर्वण और धर्म संबंधी अङ्ग और दर्शनोंका अभ्यास कर

नैय्यायिकदर्शनं दक्षिणमुखान्निर्गतम्।वेदान्त

नं पश्चिममुखान्निर्गतम् । सांख्यपातञ्जलदर्शनानि उत्तरमुखान्निर्गतानि ॥

ह्माके दक्षिणमुखसे न्यायशास्त्र निकला पश्चिममुखसे वेदा-
ास्त्र और उत्तरमुखसे सांख्यशास्त्र और योगशास्त्रनिकले ।

षड्दर्शनेषु भगवतः स्वरूपं ब्रह्म वासुदेवसङ्कर्ष-
णप्रद्युम्नानिरुद्ध इति चतुर्धा प्रतिपाद्यते ॥

न्याय, वैशेषिक, सांख्य, योग, मिमासा और वेदान्त-
छहों शास्त्रोंमें भगवान्का वासुदेव, संकर्षण, प्रद्युम्न और
नेरुद्ध ये कथन कियाहै यही चार प्रकारका ब्रह्म
तेपादित है ।

केचित् तत्र सगुणो वासुदेवो देवता, ऋग्वेदो वेदः,
सत्ययुगं, ब्राह्मणवर्णः, सात्विकगुणः, तपोनिष्ठा
इति नैयायिकदर्शनप्रामाण्यम् ॥

कोई कहते हैं कि, सगुण वासुदेव देवता है, वेद ऋग्वेदहै,
र सत्ययुग है और ब्राह्मण वर्ण है, सात्विक गुण है, तपमें
रत रहता है ये न्यायदर्शनका प्रमाण है ।

प्रणवजपः केवलज्योतिर्मयध्यानं सर्वं खल्विदं
ब्रह्मेति ज्ञाननिष्ठा । भेदोनास्ति । इति ऋग्वेदस्य
ब्रह्मशब्दनिर्णयस्तृतीयःसिद्धान्तः ॥ ३ ॥

प्रणव अर्थात् ॐकारका जप केवल ज्योतिर्मय ब्रह्म-

का ध्यान करना और "सर्वं खल्विदं ब्रह्म" यह श्रु
कहती है कि, दृश्यमान समस्त जगत् प्रपञ्च ये ब्रह्म
ज्ञानका निश्चय और ब्रह्मके अतिरिक्त भेद कुछ
नहीं है यह वेदान्तदर्शनका सिद्धान्त है यहांपर्यंत श्रु
ब्रह्मशब्दका निर्णय समाप्त हुआ ।

अतःपरं यजुर्वेदसम्बन्धिवाक्यनिर्णयः कथ्यते
इसके अनन्तर यजुर्वेदसंबधी वाक्योंका निर्णय

अहं ब्रह्मास्मीति श्रुतिः ।

मैं ब्रह्म हूं यह श्रुतिका साधारणतः अभिप्राय है

अथाहंशब्दनिर्णयंवक्ष्यति । अहं जगत्कर्ता ।
जगद्धर्ता । अहं जगत्साक्षी । अहं जगत्प्रेरकः
अहं जगद्भोक्तेति श्रुतिः ॥

अब अहंशब्दका निर्णय कहते हैं श्रुतिमुखसे मैं ज
करनेवाला हूं और मैंही जगत्को प्रतिपालन करने
जगत्का साक्षी मैं हूं जगत्का प्रेरक और भोक्ता मैं

मय्येव सकलंजातं मयि सर्वं प्रतिष्ठितम् ॥ मयि
लयं याति तद्ब्रह्मास्म्यहमद्वयम्॥ इति श्रुतेर्वा
प्रमाणम् ॥

मेरेमेंही समस्त जगत्प्रपञ्च उत्पन्न हुआहै औ
स्थित है और मेरेमें सर्व लयको प्राप्त होताहै इसीलि
यब्रह्म मैं हूं यह श्रुतिके अनकूल प्रमाण हुआ ।

अहंशब्दो ब्रह्मणि रूढो भवति।"अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते" इति भगवद्वचनप्रामाण्यात्॥

अहंशब्द ब्रह्ममें रूढ़ है. मैं समस्तका उत्पत्तिस्थान हूं और मुझसे सर्व उत्पन्न होता है इस भगवद्वचनके प्रमाणसे ।

अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम् ॥ पश्चादहं यदेतच्च योवशिष्येत सोस्म्यहम् ॥

अब अहंशब्दके अर्थका निरूपण करते हैं कि सृष्टिसे पहिले मैं था और सत् असत् कुछभी न था और सृष्टिके पीछेमें और दृश्यमान ये जगत् और जो कुछ अवशिष्ट बचेगा सो मैंहीहूं

इति सृष्ट्यादौ सृष्टिमध्ये सृष्ट्यन्ते पिसदेवास्ति ॥ निःसत्त्वम्प्रति पाद्यते इति भागवते ॥

जगत् उत्पत्तिसे पहिले और जगत्के मध्यमें और सृष्टिके अन्तमें ब्रह्महीकी केवल सत्ता प्रतिपादित है ये भागवतमें निरूपित है ।

अत एवाहंशब्देन विशेषेण ज्ञानमुच्यते।"मयिसर्व मिदं प्रोतं सूत्रे मणिगणाइव" इत्युपनिषद्वाक्यप्रामाण्यात्॥

अत एव अहंशब्दसे विशेषज्ञान निर्णित हुआ जैसे तागे मालाके मनिया पिरोये रहते हैं उसी तरह ये समस्त जगत् प्रपञ्च मेरेमें इस उपनिषद्के वाक्यप्रमाणसे पोयाहुआ है ।

कथम् । स्वतश्चैतन्यात् । यत्र स्वतश्चैतन्यं तत्र स्वतः

प्रकाशत्वं स्वतन्त्रत्वं तत्रैवाहंशब्दः संभव अन्यत्र कुत्रापि न सम्भवति तद्व्यतिरेकेण ॥ स्थू प्रत्यक्षादिसमस्तपदार्था जडाः ॥

कैसे स्वतःचैतन्यसे जहाँ स्वतःचैतन्य है वहांही स्वयं प्रकाशता और स्वाधीनता है और अहंशब्दका भी वहांही है और कहीं नहीं संभव है उस चैतन्यके रिक्त स्थूल प्रत्यक्षसे आदि समस्त पदार्थ जड हैं.

अतएव मूलप्रकृतिस्तदात्मा चैतन्याभिमा भवति अहं ईश्वर इति मन्यते यदा तदाहंश प्रकृत्यारूढो भवति ॥

इसीलिये तब मूलप्रकृति ( माया ) आत्मासे चैत अभिमान करती है मैं ईश्वर हूं ऐसा मानती है तब शब्द प्रकृतिमें आरूढ होता है अर्थात् मायामय जगत् न्ता विराज मान होती है ।

स प्रकृत्या त्रिगुणात्मिकया युतो यदा भवति वो अहं शब्द सत्त्व, रज, तम, इन तीनों गुणों संयुक्त मायाके संयुक्त होता है ।

तदाहंशब्दः त्रिगुणात्मको भवति ॥

तब अहंशब्द सत्त्व, रज, तम त्रिगुणात्मक कहाजा

तत्र सत्त्वगुणात्मको विष्णुपदाभिमानं करोति

जोगुणात्मको ब्रह्माभिमानङ्करोति तत्र प्रकृतिकार्यं महत्तत्त्वाभिमानङ्करोति ॥

उनमें सत्वगुणविशिष्ट अहंशब्दको विष्णुके पदका अभि- होता है और रजोगुण विशिष्टको ब्रह्मा ( प्रजापति ) अभिमान होता है तिनमें प्रकृति ( माया ) का कार्य तत्त्वका अभिमान करता है ।

वासुदेवरूपेणमहत्तत्वकार्यमहङ्काराभिमानङ्करोति संकर्पणरूपेणाहंकारकार्यंचित्ताभिमानं करोति प्रद्युम्नरूपेण चित्तबुद्ध्याद्यभिमानं करोति अनि- रुद्ध रूपेण बुद्धिकार्याभिमानं करोति ॥

महत्तत्त्वका कार्य वासुदेवरूपसे अहंकारका अभिमान ता है और संकर्षणरूपसे चित्तका अभिमान और चित्त- म्नरूपसे कार्यबुद्धिका अभिमान करता है और अनिरुद्ध से बुद्धिके कार्यका अभिमान करता है ।

देवतादिरूपेण तत्कार्यंशब्दादिविषयाभिमानं करोति नादरूपशब्दस्पर्शरसरूपगन्धादिरूपे- ण तत्कार्यंज्ञानेन्द्रियाभिमानंकरोति प्रवृत्तिस्वरू- पेण तत्कार्यकर्म्मेन्द्रियाभिमानं करोति ॥

देवतादिरूपसे महत्तत्त्वका कार्य शब्द, स्पर्श, रूप, रस, गंध- त्मक विषयका अभिमान करता है और नादरूपसे तथा ब्दस्पर्शादिरूपसे उसका कार्य ज्ञानेन्द्रिय अर्थात् श्रोत्र, त्वक्

चक्षुः, जिह्वा और नासिकाका अभिमान करता है
प्रवृत्तिस्वरूपसे उसकाकार्य हस्त, पाद आदि कर्म्म इन्द्रि
अभिमान क्रियारूपसे करता है ।

अतएव सदसदात्मकं जगत्स्थावरजंगमात्मं
कीटपतंगांडजस्वेदजजरायुजोद्भिज्जसमस्तजन्
श्चतुरशीतिलक्षयोनिं पृथक् पृथक् याति ॥

इसलिये सत् असत् आत्मक जगत् स्थावर वृक्ष
जंगम कीट ( कीडे ) पतङ्ग अण्डज ( अंडोंसे पैदा
जीव) स्वेदज ( पसीनेसे उत्पन्न होनेवाले लीख जूँआ
उद्भिज्ज (पृथिवीको फोडकर उत्पन्न होनेवाले तृण
समस्त जीवोंकी चौरासीलक्ष योनिको अलग अलग

यत्रस्वभावेन जगदभिमानो न जायते तत्सद्ब्रह्म
त्मकम्भवति ब्रह्मव्यतिरेकेण चैतन्यं न संभव
समस्तप्रपञ्चस्य जडत्वात्ततोऽभिमानोन संभ

स्वभावसे जगत्का अभिमान ( अहञ्जगत् ) इत्या
अभिमान नहीं होता स्वभावसे ( तत् सत् ब्रह्म ) वो
और ब्रह्म रूप है—क्योंकि विना ब्रह्मके चेतनताही
सकती सकल जगत् प्रपञ्चको जड होनेसे अतएव जगत्
श्चमें अभिमान नहीं होसकता ।

तस्याभिमाने नित्यत्वङ्कथं संभवति—अच्युतो
मनन्तोऽहं गोविन्दोहमहं हरिः ॥ आनन्दोहमशे

मजोहममृतोऽस्म्यहम् ॥ १ ॥ नित्योहं निर्विका
रोऽहं निरञ्जनोहं विशेषशून्यः परमात्मा इत्यादि
वाक्येनाहंशब्दप्रमाणम्भवति ॥

मैं अच्युत हूं अनन्त हूं गोविन्द हूं मैं हरि हूं मैं आनन्द हूँ
अशेष हूं और मैंही अजहूं और अमृत ( अविनाशी )
॥ और नित्यहूं निर्विकारहूं और निरंजनहूं—इत्यादि श-
करके जगन्नियन्ता परमात्माका निरूपण कर अहंशब्द-
प्रमाणित करते हैं।

यथेश्वराभिमानो न सम्भवति तथा कर्तायष्टा ज्ञाता
भोक्तेत्यपि न सम्भवति ॥

जैसे ईश्वरको अभिमान नहीं संभवता तैसे कर्त्ता यष्टा ज्ञा
भोक्ता इत्यादिभी नहीं संभवते ।

जडत्वाप्राप्तेस्तथाभिमानःकुत्रापि न संभवति ।

जडत्व प्राप्तहुआ तैसा अभिमान कहीं नहीं होसकता।

यथा मृतकन्यायेन सच्चिदानन्दस्वरूपः परमात्मा
कथ्यते ॥

जैसे मृतकन्याय ( मरेबाद निर्विकार जैसे होता है )
सत् चित् आनन्दस्वरूप परमात्मा कहाजाता है ।

चतुर्वेदप्रमाणम् । अहंशब्दो ब्रह्मवाचको भवति अ-
हंशब्दान्मायोपाधिरहितमव्यक्तस्वरूपमभिमन्यते ॥

इसमें चारों वेदोंका प्रमाण है इसीलिये अहं शब्द ब्रह्म-

का वाचक है अहं शब्दसे माया उपाधिरहित अव्यक्त
मैं हूं ऐसा मानता है ।

अन्तःकरणव्यक्तिङ्करोति परापश्यन्तीमध्यमा
वैखरीरूपेण प्रकटीकरोति अहंशब्दार्थनिर्णया
परमात्मा निर्विशेषेण कथ्यते ॥

और अन्तःकरणको स्पष्ट करता है परा पश्य
मध्यमा वैखरीरूपसे प्रगट करता है अहंशब्दके नि
परमात्मा विशेष कहाजाता है ।

तत्र प्रकृतिवादिनाम्मतेहंशब्दो ब्रह्माणि न सम्भ
ति। कथम्। आत्मानिर्गुणः शब्दस्तु गुणोऽनयो
परस्परंविरोधः ॥

उसमें प्रकृतिवादीके मतसे अहंशब्द ब्रह्ममें नहीं संभ
सकता कैसे शब्द इस गुणका और निर्गुणका परस्पर वि
अहंशब्देऽभिमानलक्षणं मोक्षबाधकं रूपं,उच्यते
त्कथं अहंशब्देन ब्रह्म संभवति इत्येका शङ्का।अ
द्वितीया शङ्का ब्रह्मैकं प्रपञ्चोऽनेकः कथं पृथक्
अहंशब्दमें अभिमान लक्षण मोक्षका बाधक रूप है
फिर कैसे अहंशब्दसे ब्रह्मका संभव होसकता है
आशङ्का और दूसरी आशंका कि, ब्रह्म एक है और
नाना है तो पृथक् कैसा?

अभिमानः संभवति यथानन्तघटेष्वनन्तजीव
संभवन्ति ॥

अब कहते हैं कि, अभिमान होसकता है जैसे नाना टोंमें अनन्त जीव उत्पन्न होते हैं तैसे—

केषाञ्चिदाचार्याणाम्मतेनैतत्सत्यत्वं सावधानमिति शृणु—

किसी किसी आचार्योंके मतसे इसको सत्यता सावधान अर्थात् यथार्थ है सो सुनिये ॥

यदि ब्रह्मणि अभिमानो नास्ति अतएव यत्र चैतन्यन्तत्रैवाभिमानत्वं संभवति अत्र ब्रह्म चैतन्यत्वस्वरूपम् ॥

जो ब्रह्ममें अभिमान नहीं है इसीलिये जहाँ चैतन्यता होती है वहीं अभिमानका संभव होता है यहां तो ब्रह्मका चैतन्यत्वस्वरूप है.

अतएवाहंशब्दवाच्यं ब्रह्मैव संभवति नान्यत्र कुत्रापीत्याशङ्का परिहृता । अथ द्वितीयाशङ्काम्परिहरति ब्रह्म तदेकं प्रपञ्चास्त्वनेकाः कथं पृथक् ॥

अतएव अहंशब्दका वाच्य ब्रह्मही है अन्यत्र अहं शब्दका प्रयोग नहीं होसकता ये आशंकाका परिहार हुआ अब दुसरी आशंका कि, ब्रह्म एक है और प्रपञ्च अनेक हैं कैसे अलग होसकता है इसका निवारण करते हैं—

अभिमानः संभवति ब्रह्म तदेकं तत्र दृष्टांतमाह यथा सूर्य एकश्चक्षुरनेकन्तत्प्रकाशं करोति ॥

अभिमान हो सकता है ब्रह्म एक है वहां दृष्टांत कहे कि, जैसे सूर्य एक है और चक्षु अनेक हैं पर एकही अनेक चक्षुओंको प्रकाशित करताहै.

यथाग्निरेकोऽनेकोपाध्युष्णत्वं करोति एकश्चन्द्रो ज्योत्स्नाअनेकाः सन्ति मृत्तिकैकैव घटास्त्वनेकाः सूर्य एकश्च रश्मयस्तु अनेका अग्निरेक एव स्फुलिङ्गा अनेकाः समुद्र एकश्च तरङ्गा बहवो बुद्बुदाश्चानेकाः--

और जैसे अग्नि एक है पर अनेक उपाधि उष्णता करे है और जैसे चन्द्र एक है और ज्योत्स्ना ( चांदनी ) अनेक है और मृत्तिका एकही है पर उससे घट अनेक उत्पन्न होते हैं और जैसे सूर्य एक है रश्मि ( किरणों ) अनेक हैं और अग्नि एक है पर स्फुलिंग ( चिनगारी ) अनेक हैं और समुद्र एक है पर तरङ्ग और बुद् बुदे अनेक उत्पन्न होते वैसेही ब्रह्म एक है उसमें प्रपञ्च अनेक हैं--

अमुना प्रकारेणैकमेव ब्रह्म मायामयमनेकं प्रपञ्चमनेकमभिमानमुत्थापयति ।

इसप्रकारसे एकही ब्रह्म अनेक मायाके प्रपञ्च और अभिमानको करताहै ।

देहाभिमानोत्पादकः स परमात्मा अहंशब्दवाच्योऽनन्तशक्तिरहंकारस्वरूपेण प्रपञ्चमनुवर्त्तते "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः "सर्वं खल्विदं ब्रह्म" इति श्रुतेश्च—

शरीरका अभिमान जैसे मैं क्षत्रिय हूँ ब्राह्मण हूँ वैश्य हूँ इत्यादि अभिमानको उत्पन्न करनेवाला वो परमेश्वर अहंशब्द-करके वाच्य अनन्तशक्ति अहंकारस्वरूपसे प्रपञ्चको प्राप्त होताहै, जिसमें श्रुति प्रमाण है कि,(तत्सृष्ट्वा तदेवानुप्राविशत्) वह परमात्मा जगत्को उत्पन्न करा आपही जगत्में प्रवेश करताहुआ प्रपञ्च(सर्वं खल्विदं ब्रह्म ) और ये सकल ब्रह्म है।

इति पूर्वोक्ताशङ्का परिहृता॥यजुर्वेदिकाहंकारशब्द-निर्णयश्चतुर्थसिद्धान्तः ॥ ४ ॥

इतना कहनेसे पूर्वकी सर्व आशंका निवृत्त होगई ॥ इति यजुर्वेदके अहंकारशब्दके निर्णयका चतुर्थ सिद्धान्त ॥ ४ ॥

॥ अतः परं ब्रह्मनिर्णयः कथ्यते ॥

अब ग्रन्थकार ब्रह्म क्या पदार्थ है ? उसका विवेचन करते हैं ॥

बृहत्त्वाद्ब्रह्म तेन ब्रह्मशब्देन बृहत् अस्थूलं रूपं परमहंसतद्व्यापकस्वरूपं पूर्णं सर्वानुस्यूतं स्थूल-त्वादिगुणरहितं देशतः कालतश्चापरिमितम्म-र्य्यादारहितम् ॥

बृहत् ( व्यापक वा महान् ) होनेके कारण ब्रह्म र
जाताहै, उस ब्रह्मशब्दसे भारी और अस्थूल ( सूक्ष्म )निर
परमहंस ( जगत् प्रपञ्च और जीव ईश्वरके स्वरूपकी
मांसा करनेवाला ) और व्यापकस्वरूप परिपूर्ण सर्व
पदार्थके साथ संबंधित स्थूल, कृश, सूक्ष्म, इत्यादि
करके रहित देश और काल करके जो प्रमाणमें न आउस
अर्थात् इस देशमें है और इसमें नहीं अथवा इस समयमें
और पहिले नहीं था इत्यादि व्यवहारशून्य मर्यादा (अ
रहित अर्थात् यहां पर्यन्त है और यहां नहीं, इस मर्या
रहित ॥

आकाशादितत्त्वानि येन पूर्णेनाकाशपूर्णता भवति तत्पूर्णतया पृथ्वीपूर्णता भवति तत्पूर्णतयापाम्पूर्णता भवति तत्पूर्णतया तेजःपूर्णता भवत्येवमाकाशादिसमस्तप्रपञ्चाधारभूतं बृहत्त्वाद्ब्रह्मेत्युच्यते "सर्वाधारो निराधार" इति श्रुतेः ॥

जिसकी पूर्णतासे आकाश, वायु, तेज, जल, पृथ्वी
तत्त्वोंकी पूर्णता है, अर्थात् जिस परमात्माकी शक्तिसे
स्त तत्त्व सत्तामान् प्रतीत होते हैं उसीको स्पष्ट करते हैं
जिसकी पूर्णतासे पृथ्वीकी और जलकी तेजकी पूर्णता
र्थात् व्यापकता है इसप्रकार आकाशादि समस्त प्रपञ्च
गत्का आधारभूत ब्रह्म है व्यापक होनेसे ब्रह्मशब्दवाच्य
रमेश्वर कहाता है देखिये श्रुति "सर्वाधारो निराधारः"

परमात्मा सर्वप्राणी पदार्थ जगत्प्रपञ्चका आधार है और निराधार है अर्थात् कमलपत्रके समान निर्लेप है ॥

यथा वृक्षच्छायायां वृक्षस्य सत्यता भवति तथे-श्वरसत्तायां भासमात्रायां जगत्सत्यत्वम्प्रतीयते॥

जैसे वृक्षकी छायामें वृक्षकी सत्ता अर्थात् सत्यता है, उसी प्रकारसे ईश्वरकी सत्ताकी प्रतीतिमें जगत्की सत्यता प्रतीत होती है ॥

अनन्तकोटिब्रह्माण्डप्रकाशकोऽनन्तकोटिब्रह्मा-ण्डप्रेरकोऽनन्तकोटिब्रह्माण्डांतर्वर्त्ती"स निर्लेपो-ऽत्यन्तसूक्ष्मात्सूक्ष्मतरम्"इति श्रुतेः ॥

और अनन्तकोड ब्रह्माण्डका प्रकाशक अनन्तकोड ब्रह्माण्डका प्रेरक असंख्य ब्रह्माण्डमें व्याप्त होरहा है, तिसमें श्रुति भी प्रमाण है, कि, " स निर्लेपोऽत्यन्तसूक्ष्मात्सूक्ष्म-तरमिति श्रुतेः ॥" वह परमात्मा कमलदलके समान निर्लेप और अति सूक्ष्म पदार्थसे भी सूक्ष्म है ॥

अत्र केवलानुभवः प्रमाणम्, प्रकाशरूपं स्व-चैतन्यस्वरूपेणाऽऽकाशवदखण्डदण्डायमानम् ॥

इसमें समाधि लक्ष्य और गुरु लक्ष्यसे और श्रवण मनन निदिध्यासनरूपसे प्राप्त किया जो निश्चय अनुभव है, वही प्रमाण है स्वयंप्रकाशरूप है, और स्वयं चेतनरूपसे आकाशके समान और अखण्ड दण्डके समान है, अर्थात् परमात्मा सर्वव्यापी और अनन्त है ॥

ऊर्ध्वाधस्तिर्यङ्मर्यादारहितं पूर्णं ब्रह्म केवलं मोक्ष स्वरूपं "समो नागेन समो मशकेन सम एभिस्त्रि भिर्लोकैः" इति श्रुतेः ॥

ऊपर है वा नीचे है या टेढा है, इस मर्यादासे रहित ब्रह्म केवल मोक्ष ( मुक्त ) स्वरूप है, तिसमें श्रुति प्रमा "समो नागेन समो मशकेन सम एभिस्त्रिभिर्लोकैः" प हाथी वा पर्वतके समान है और (मशक)मच्छरके स और इन तीनों लोकोंके समान हैं, अर्थात् जगदीश्वर छोटा और बडेसे बड़ा है, "अणोरणीयान्महतो मही अणु से अणु और बडेसे बड़ा है ॥

एवमनेन प्रकारेण ब्रह्मशब्दोऽखण्डानन्तस्वरू वाचको ब्रह्मशब्देन परमात्मा विशेषेण विज्ञायते यजुर्वेदसंबंधिब्रह्मशब्दनिर्णयः पञ्चमसिद्धान्तः॥

इस प्रकारसे ब्रह्मशब्द अखण्ड और अनन्तस्व वाचक है ब्रह्मशब्दसे परमात्माही जाना जाता है यजुर्वेदसंबंधी ब्रह्मशब्दके निर्णयका पञ्चम सि समाप्त ॥

अथ परमस्मिशब्दनिर्णयः कथ्यते ॥

इसके अनन्तर परं और अस्मिशब्दका निर्णय क अस्मिशब्देन युष्मदस्मत्प्रत्ययगोचरयोः स्व रूपयोर्मध्येऽस्मत्प्रत्ययगोचरस्वरूपमस्मिशब्द प्रत्येति ॥

अस्मिशब्दसे युष्मत् और अस्मत् प्रत्ययको विषय करनेवालेके मध्यमें अस्मत्प्रत्ययके विषयके स्वरूपको अस्मिशब्द करता है, अर्थात् युष्मत्शब्दका अर्थ तुम और अस्मत् शब्दका हम है, और अस्मि ये क्रिया है, हूं इस अर्थमें तो युष्मत् और अस्मत्के मध्यमें अस्मत्को अस्मि ये क्रिया विषय करती है, जैसे अस्मत्का अहं बनता है, और श्रुतिमें लिखा है कि, "अहं ब्रह्मास्मि" तो मैं ब्रह्म हूं यहां श्रुतिने अस्मत्प्रत्ययका गोचर जो अहं है,उसको ( अस्मि हूं ) ये विषय करता है ।

अस्मदि अप्रयुज्यमानेप्यस्मिप्रत्ययो भवति, अस्मिशब्दोहंप्रत्ययःकोहमितिविचारो अहंशब्द आत्मवाचको भवति ॥

अस्मत्के प्रयोग विना भी अस्मत्की प्रतीति होती है अस्मि ये शब्द अहंशब्दको विपर्यय करता है मैं कौन हूं ये विचार है और अहंशब्द आत्माका वाचक है ॥

तत्र युष्मत्प्रत्ययगोचरं प्रकृतिवाचकं परस्मैपदमस्मिशब्देन प्रतीयते तत्परामर्शविचारादहं ब्रह्म अपरा प्रकृतिः । अस्मिपदेनापरं प्रकृतिस्वरूपं निरूप्यते ॥

उसमें युष्मत्प्रत्ययका विषय प्रकृतिका वाचक परस्मैपद अस्मिशब्दसे प्रतीत होता है उसके सूक्ष्मतत्त्वके विचारसे मैं

ब्रह्म हूं और अन्य माया है अस्मिपदसे मायाका स्वरूप निरूपण करते हैं ।

तयोः परापरयोः परस्परविरोधो ब्रह्मचैतन्यं प्रपञ्च स्तु जडो जडचैतन्ययोरैक्यं न सम्भवति । ब्रह्म चैतन्याभिमानीत्यभिमानी प्रकाशाभिमानी ॥

उन दोनों परब्रह्म और अपर मायामें परस्पर वि और ब्रह्म चैतन्य है और प्रपञ्च जड है तो चैतन्य और ज एकता नहीं हो सकती, और ब्रह्म चैतन्यका अभिमा यह प्रकाशका अभिमानी है ।

"षड्विंशको महाविष्णुर्महागुह्यो महाहविः" इति श्रुतेः ॥ षड्विंशकोयं कथं पञ्चकर्मेन्द्रियाणि पञ्च महाभूतानि पञ्च तन्मात्राणि विषयाश्चान्तःकरण चतुष्टयमभिमानसंज्ञकं सत्त्वरजस्तम इति गुणत्रय रूपम् ॥

पूर्वके अर्थमें श्रुति कहते हैं, कि" वह ब्रह्म षड्विंश महाविष्णु है, महा गुप्त है, और महान् हवि है" षड्विंशक हैं? पांच कर्मेन्द्रिय, पृथिवी, जल, तेज, वायु, आकाश ये महाभूतपञ्चतन्मात्रा और विषय और मन, बुद्धि, चित्त, अहं इनका समुदाय अन्तःकरण ये अभिमानसंज्ञक और सत्त्व तम इन तीनों गुणोंके रूप यह षड्विंशक (छब्बीसका समुदाय

तत्र मूलप्रकृतिः समस्तस्वरूपमिति सर्वेषां भव ति तत्र मूलप्रकृतिर्ब्रह्मविषया नित्यचैतन्यस्वरू

माया, परस्परं संश्लिष्टम्भवति "कूटस्थस्सर्वसंश्लिष्टो वाङ्मनोगोचरातिगः" इति श्रुतेः ॥

उसमें मूलप्रकृति समस्त जगत् प्रपञ्चरूप होती है, और ब्रह्मको विषय करनेवाली मूलप्रकृति माया नित्य चैतन्य स्वरूपके साथ परस्पर संबंधको प्राप्त होती है उसमें श्रुति प्रमाण है "परमात्मा कूटस्थ अर्थात् घनके समान है और सर्वके साथ संबंधवाला है, और मन वाणी करके अगम्य है ॥"

तत्र दृष्टान्तमाह ॥ यथा पयसि घृतमिव, काष्ठेऽग्निरिव,यथा तिलेषु तैलमिव,यथा पृथिव्यां गन्ध इव, यथा जलेषु रस इव, यथा वायौ स्पर्श इव, यथाकाशे शब्द इव ॥

उसमें अनेक दृष्टान्तोंसे दृढ़ करते हैं जैसे दूधमें घृत है लकड़ियोंमें अग्नि है तिलोंमें तेल है और जैसे धरतीमें गंध है जलमें रस, वायुमें स्पर्श और आकाशमें शब्द है ॥

अमुना प्रकारेण प्रकृतिपुरुषयोरन्योन्यानादिसंवन्धो भवति ॥ तदेतद्युक्तं ब्रह्म अक्रियमसङ्गं निर्लेपमोक्षस्वरूपमित्युक्तम् अवन्धस्वरूपं प्रकाशस्वरूपं स्वतश्चैतन्यम् ॥

इसप्रकारसे प्रकृति पुरुष माया और ब्रह्मका परस्पर अनादिसंबंध है ये सत्य है जो ब्रह्मको क्रियारहित संगहित निर्लेप मोक्षस्वरूप कहा है और बंधनरहित स्वयं प्रकाशरूप और स्वचेतन कहा है ॥

माया तु जडस्वरूपाऽचैतन्यस्वरूपा । यथा ।
मृत्पिण्डस्य स्वक्रिया न संभवति, तथा मायाया
अचैतन्येन आत्मक्रिया न संभवति। आदिकारि-
त्वाच्चेति पूर्वोक्ता शंका परिहृता ॥

और माया तो जडस्वरूप अचेतनस्वरूप है जैसे मृत्तिक
स्वतः क्रिया नहीं होती वैसेही मायाको अचेतन होनेसे आ
क्रिया उसमें नहीं संभवती मायाको आदिकारी ( अ
सान्त होनेसे) इतने कथनसे पूर्वोक्तकी आशङ्का निवृत्त हुई

अस्मिशब्देनान्तर्व्यावर्तिशोधने हेतुभूतं साक्षात्का-
रोपरोक्षज्ञानसाधनमुच्यते ॥

अस्मिशब्दसे अभ्यन्तरके संशोधनका कारण साक्षात्
अपरोक्ष ( प्रत्यक्ष ) ज्ञानका कारण कहा है ॥

तत्र पुरुषसंयोगेन प्रकृतिश्चैतन्यात्मतया कर्त्री
भवति। ततः प्रकृतिः क्रिया संभवति वैकारिकी
संभवति।

उसमें पुरुषके संयोगसे प्रकृति चैतन्यात्मक होकर क
और फिर चेष्टा और विकारवाली होती है ॥

तत्र दृष्टान्तमाह । किमिव, सूर्यमग्निरिव। तत्र
सूर्यस्थाने ब्रह्म अग्निस्थाने मूलप्रकृतिः अग्नि-
स्थाने कार्यं समस्तं किमिवाग्निपात्रमिव चुम्ब-
कलोहमिव ॥

उसमें दृष्टान्त कहते हैं, जैसे सूर्य और अग्नि उसमें सूर्यके स्थानापन्न ब्रह्म और अग्निके स्थानापन्न अनादि माया है और अग्निके स्थानमें समस्त जगत्रूप कार्य है, जैसे अग्नि और पात्र और चुम्बक और लोहा है ।

अन्धपङ्गुन्यायेन प्रकृतिपुरुषसंयोगेन क्रियोत्पत्तिर्भवति ॥ एकज्ञाने वहुधा ज्ञानमूलमस्ति तदा नाना चेष्टा भवति ॥

अंधपङ्गुन्याय अर्थात् अंधेके आँख नहीं हैं, और पंगु पादरहित है ये पुरुष दोनों मिलकर जैसे कोई कार्य करें उसको अंधपंगुन्याय कहते हैं उसीतरह प्रकृति और पुरुषके संयोगसे क्रियाकी उत्पत्ति होती है, एकही ज्ञान अनेक ज्ञानोंका कारण है, तभी नानाप्रकारकी चेष्टा होती है॥

बन्धमोक्षस्वर्गनरकपापपुण्यमूर्खत्वपाण्डित्यविकारेण ब्रह्मादिपिपीलिकापर्यन्तं ज्ञानिस्वभावं पृथक्॥२॥

बंधन मोक्ष स्वर्ग नरक पाप और पुण्य मूर्खता और विद्या आदि विकार करके ब्रह्मासे लेकर चींटीतक ज्ञानीका स्वभाव पृथक् पृथक् है ॥

परमात्मा एक एव तस्य शोधने हेतुः क्षीरनीरमैक्यं कृत्वा तत्साधनकारणं परमहंसमार्गो निरूप्यते ॥ तत्र एकं पारमार्थिकं ज्ञानमेकं व्यावहारिकं तस्य शोधने हेतुः अस्मिशब्दवाक्यं प्रमाणं वर्त्तते ॥

परमेश्वर एकही है उसके संशोधनका हेतु दूध और मिलाके उसके पृथक् करनेके साधनका कारण पर मार्गका निरूपण करते हैं, उसमें एक पारमार्थिक और दूसरा व्यावहारिक उसके शोधनमें कारण शब्दका वाक्य प्रमाण है ॥

पूर्वमुक्तं पञ्चविंशतितत्त्वानां ब्रह्मस्वरूपतानिराक णपूर्वं षड्विंशं ब्रह्म प्रतिपाद्यते ॥

पहिले चौवीस तत्त्वोंको कहचुके हैं, अब ब्रह्मके स्व निराकरणपूर्वक छब्बीस तत्त्वात्मक ब्रह्म है, सो कहते हैं

तत्रादौ कर्म्मेन्द्रियवृत्तिशोधनं क्रियते॥ कर्मेन्द्रिय ब्रह्म न संभवति कर्मेन्द्रियवृत्तिभेदात्। कथं वृत्ति भेदो वाचा वक्तव्यंक्रिया भवति । हस्ताभ्यां पानादिक्रिया भवति। पादाभ्यां गमनक्रिया भवति। पायोर्मलोत्सर्गक्रिया भवति ॥ उपस्था न्मूत्रोत्सर्गः स्त्रीपुंसोरानन्दक्रिया च भवति ॥

उसमें पहिले कर्मेन्द्रियोंकी वृत्ति शोधन करते हैं कर्मे ब्रह्म नहीं होसकती क्योंकि कर्मेन्द्रियोंकी वृत्तिका भेद है वृत्तिभेद कैसे है सो दिखलाते हैं कि, वाणीसे जाता है और हाथोंसे पान आदि कर्म किया जाता पाउँसे गमन, गुदासे मलका त्याग और लिंगसे मूत्रका और संभोग किया जाता है ॥

एवंक्रियं कर्म्मेन्द्रियं ब्रह्म न संभवति, तर्हि एवमिन्द्रियं ब्रह्म संभवति चेन्न तत् ॥

इसप्रकार कर्मेन्द्रियोंको पृथक् पृथक् कर्म करनेवाली होनेके कारण कर्मेन्द्रिय ब्रह्म नहीं होसकती, इसीतरह इन्द्रियमात्र ब्रह्म नहीं होसकती ॥

ज्ञानेन्द्रियस्य वृत्तिभेदात् । श्रोत्रेण शब्दग्रहणङ्करोति । चक्षुषा रूपग्रहणं करोति । जिह्वया रसग्रहणं करोति। त्वचा स्पर्शग्रहणङ्करोति । एवं ज्ञानेन्द्रियमेकमेकं विषयग्रहणं करोति। अल्पज्ञत्वाज्जडत्वाच्च ॥

अथ ज्ञान इन्द्रियोंकी वृत्तिके भेद दिखलाते हैं, ज्ञानेन्द्रियोंके वृत्तिके भेदसे कानसे शब्दका ग्रहण, चक्षुसे रूपका, जिह्वासे रसका, चर्म से स्पर्शका ग्रहण किया जाता है इसी प्रकार ज्ञानेन्द्रिय भी एकही एक विषयका ग्रहण करती है, क्योंकि, अल्पज्ञ और जड है--

यच्छब्दग्रहणङ्करोति न तत्स्पर्शग्रहणं करोति, यत्स्पर्शग्रहणङ्करोति न तद्रूपग्रहणं करोति, यद्रूपग्रहणङ्करोति न तद्रसग्रहणङ्करोति । यद्रसग्रहणङ्करोति । न तद्गंधग्रहणं करोति । एकैकस्य ज्ञानेन्द्रियस्यानेकतत्त्वाज्ञानान्नानेकत्वम् ॥

जो इन्द्रिय शब्द ग्रहण करती है, वो स्पर्शग्रहण नहीं करती और जो इन्द्रिय स्पर्शग्रहण करती है वो रूपका

ग्रहण नहीं करती और जो रूपका ग्रहण करती है, वो ग्रहण नहीं करती, इसी तरह जो रसका ग्रहण करती गंधका ग्रहण नहीं करती, ज्ञानेन्द्रियोंको अनेक तत्त्वके उत्पन्न न होनेसे अनेकत्व नहीं है, अर्थात् एक एक विष एकही एक इन्द्रिय ग्रहण कर सकती है।

ब्रह्म तु "सर्वज्ञं सर्वेश्वरं सर्वनित्यं सर्वेन्द्रियगुणद्रष्टृ सर्वप्रत्ययसाक्षी" इति श्रुतेः। तस्माज्ज्ञानेन्द्रियस्य ब्रह्मत्वं न संभवति ॥

और ब्रह्म तो सर्वज्ञ है, सर्व प्राणी पदार्थका स्वामी सर्व पदार्थमें नित्य है समस्त इन्द्रिय और गुणोंका द्रष्टा और प्रत्येक पदार्थकी सत्ताका साक्षी है, यह उपरोक्त श्रुति है, अर्थ प्रमाण है, इसवास्ते ज्ञानेन्द्रियोंको ब्रह्मत्व नहीं होसक

तर्हि ब्रह्मणो देहः सम्भवति इति चेन्न देहस्य षड्भावविकारित्वात्तस्य षड्भावा अस्ति जायते वर्द्धतेऽपक्षीयते विपरिणमते विनश्यति ॥

तब ब्रह्मको शरीर होसकता है। इस आशंकाके होते हैं कि, नहीं. क्योंकि, देह छे विकारों करके संयुक्त है ब्रह्म निर्विकार है वे विकार यह हैं कि, गर्भाधान रहतेही हैं, है ॥ १ ॥ फिर उत्पन्न भया ॥ २ ॥ बढता है ॥ ३ लोमश्मश्रुसे विकृतिको प्राप्त होता है ॥ ४ ॥ युवावस्था होता है ॥ ५ ॥ और नाशको प्राप्त होता है ॥ ६ ॥ छे-विकारोंकरके युक्त है ॥

एवं "शीतोष्णसुखदुःखमानाऽपमानाः ब्राह्मणादि-कीटपतङ्गमशकपर्यन्ताः समस्तस्थूलसूक्ष्मदेहधर्माः षड्भावविकाराः" इति श्रुतेः ॥

इसीप्रकार "शीत, उष्ण, सुख, दुःख, मान, अपमान, ब्राह्मसे आदिले कीडे, पतङ्ग, मच्छरपर्यन्त समस्त स्थूल सूक्ष्म देहके धर्म छे विकार हैं" यह श्रुति प्रमाण है--

"देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा॥ तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति॥"इति भगवद्वाक्यप्रामाण्यात् ॥

इस देहमें जैसे कुमार और यौवन और जरा (वृद्धावस्था) है, इसीतरह अन्य देहकी प्राप्ति होती है, इसमें विद्वान् मोहको नहीं प्राप्त होता इस भगवान्के वचन प्रमाणसे ॥

अयन्तु शुद्धो बुद्धो नित्यमुक्तोऽखण्डानन्दैकरसः षड्भावविकाररहितस्तथा च भगवद्वाक्यम्—" न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ॥ अजो नित्यः शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे ॥" इति ॥

यह आत्मा तो शुद्ध है ज्ञानरूप है सदा मुक्तस्वरूप है, अखण्ड आनन्द एकरस छे विकारोंसे रहित है उसमें भगवान्का वाक्य प्रमाण है कि "यह आत्मा न उत्पन्न होता है न मरता है और न कभी उत्पन्न हुआ न फिर कभी होगा,

यह तो केवल अजन्मा है, नित्य है, सार्वकालिक है, है और शरीरके नाशसे न इसका नाश है ।"

इति सर्वानुस्यूतोऽखण्डदण्डायमानोऽस्ति । य समुद्रे फेनबुद्बुदा उल्लसान्ति तथा सत्तामात्रब ब्रह्मादिकीटपतङ्गसमस्तदेहेषु उदयति देहस्तस्तो स्तं याति ॥

इसप्रकार सर्व प्राणी पदार्थमें परिपूर्ण अखण्ड नांई है, जैसे समुद्रमें फेन बुद्बुदा प्रतीत होते हैं उसी केवल सत्तामात्रसे ब्रह्मासे ले कीट पतंग पर्यंत सम्पूर्ण देहको प्राप्त होता है और लयको प्राप्त होजाता है॥

अत एव स्थूलदेह आत्मा न भवति ॥ अत श्रीमच्छङ्कराचार्यैरुक्तम् । "वपुरिदमत्र मायात पेक्षा कोशनात्मा जडप्रायः । प्रागुत्पत्तेश्च पश्च त्तदभावस्यापि विधानत्वम्" इति ॥

इसलिये स्थूल देह आत्मा नहीं होसकता, अतएव मच्छंकराचार्यजी महाराजने कहा है कि "यह स्थूल आत्मा और मायाकी अपेक्षा कोश जो पूर्व निरूपण आये हैं उसकरके जड़के समान है उत्पत्तिसे पहले और भी इस स्थूल देहका अभावही निर्धारित है" ॥

तर्हि प्राण आत्मा इति चेन्न। प्राणस्तु वायुः क्षुत्पि पासाश्वासोच्छ्वासवृत्तिपञ्चप्रकारः अपानस्त्वधोग तोत्सर्गं करोति समानस्त्वन्नपानादिपचनं करोति

प्राणस्तु कामक्रोधलोभमोहोत्पादको भवति उदानस्तु श्वासोच्छ्वासानामेकविंशतिसहस्राणि षट्शताधिकानि करोति ॥

तब प्राण आत्मा होना चाहिये तो कहते हैं कि, नहीं प्राण तो वायु है क्षुधा ( भूख ) प्यास, श्वास, उच्छ्वास इस प्रकारसे पञ्च प्रकार है उनसे अपान वायु नीचेकी वायु मलका त्याग करता है और समान वायु अन्नपानको पचाता है और प्राण-वायु काम, क्रोध, लोभ, मोहको उत्पन्न करता है और उदानवायु श्वासका आना जाना इक्कीस हजार छः सोवार करता है ॥

व्यानस्तु धावनोत्पतनप्रसरणादिसमस्तेन्द्रियवृत्तिं करोति ॥

और व्यान वायु भागना, गिरना, फैलाना, समस्त इन्द्रियोंको कार्यमें प्रवृत्त करता है ॥

आत्मा त्वचलोऽखण्डोऽक्रियोऽजो नित्यः शाश्वतः समस्तः प्राणादिवायुवृत्त्युत्पादकः श्वासोच्छ्वास-रहितस्तत्प्रवर्तक एव। तथा चोक्तं श्रीमच्छङ्कराचार्यैः—

और आत्मा तो अचल है अखण्ड है और क्रियारहित जन्मरहित नित्य एकरस है और प्राणआदि वायुकी वृत्तिका उत्पन्न करता है और श्वास उच्छ्वाससे रहित और उसका प्रवर्त्तक है सो श्रीशंकराचार्यजी महाराजने कहा है ॥

